यस्मादस्य जातस्य [1]यशसा सर्वलोक आपूरित[2]स्तस्माद्भवतु दारकस्य विदितयशा[3] इति नामेति ॥ विदितयशा[3] दारको [4]ऽष्टाभ्यो धात्रीभ्यो दत्तो द्वाभ्यामंस[5]धात्रीभ्यां द्वाभ्यां क्षीरधात्रीभ्यां द्वाभ्यां मलधात्रीभ्यां द्वाभ्यां क्रीडनिकाभ्यां धात्रीभ्याम् । सो ऽष्टाभिर्धात्रीभिरुन्नीयते [6]वर्ध्यते क्षीरेण दध्ना नवनीतेन सर्पिषा सर्पिमण्डेनान्यैश्चोत्तप्तोत्तप्तैरुपकरणविशेषैराशु वर्धते ह्रदस्थमिव पङ्कजम् । स च आढ्यो भद्रः कल्याणाशय आत्महितपरहितप्रतिपन्नः कारुणिको महात्मा धर्मकामः प्रजावत्सलः ॥ 5

यावदपरेण समयेन न्यग्रोधारामं गतः । अथासौ ददर्श बुद्धं भगवन्तं द्वात्रिंशता महापुरुषलक्षणैः समलङ्कृतमशीत्या चानुव्यञ्जनैर्विराजितगात्रं व्यामप्रभालङ्कृतं सूर्यसहस्रातिरेकप्रभं जङ्गममिव रत्नपर्वतं समन्ततो भद्रकं सहदर्शनाच्चानेन भगवतो ऽन्तिके चित्तं प्रसादितं प्रसादजातश्च भगवत्पादाभिवन्दनं कृत्वा पुरस्तान्निषण्णो धर्मश्रवणाय । तस्मै 10 भगवता आशयानुशयं[7] धातुं प्रकृतिं च ज्ञात्वा तादृशी चतुरार्यसत्यसंप्रतिवेधिकी[8] धर्मदेशना[9] कृता यां श्रुत्वा विदितयशसा दारकेण विंशतिशिखरसमुद्गतं सत्कायदृष्टिशैलं ज्ञानवज्रेण भित्त्वा स्रोतापत्तिफलं साक्षात्कृतम् ॥ स दृष्टसत्यः श्रमणब्राह्मणकृपणवनीपकेभ्यो दानप्रदानानि दत्त्वा मातापितरावनुज्ञाप्य भगवच्छासने प्रव्रजितः ॥ तेन युज्यमानेन

1) B यशोसा, CD corr.

2) Ex conject.; MS आपूरितं. It would be possible to correct also आपूरि, there is, however, no other instance in this work of an aorist in *i*.

3) Ex conject.; MS °यशसा. Cp. *infra*, l. 12, the instrum. विदितयशसा. The paraphrase of this avad. in Açokāv. (f. 247b 8—255a 2) calls the child sometimes *Viditayaçasa* (e. g. f. 249b 3, 4 and 7), sometimes *Viditayaças* (f. 253a 7).

4) MS °रकः । अष्टा°.

5) MS °भ्यामत्स°.

6) MS वर्द्धते.

7) B °शयधातुं, P corr.

8) B °धिकीं, D corr.

9) MS °शनां.

घटमानेन व्यायच्छमानेनेदमेव पञ्चगण्डकं संसारचक्रं चलाचलं विदित्वा सर्वसंस्कारगतीः शतनपतनविकिरणविध्वंसनधर्मतया पराहत्य सर्वक्लेशप्रहाणादर्हत्वं साक्षात्कृतम् । अर्हन्संवृत्तस्त्रैधातुकवीतरागः[1] समलोष्टकाञ्चन आकाशपाणितलसमचित्तो वासीचन्दनकल्पो विद्याविदारिताण्डकोशो विद्याभिज्ञाप्रतिसंवित्प्राप्तो भवलाभलोभसत्कारपराङ्मुखः सेन्द्रोपेन्द्राणां देवानां पूज्यो मान्यो ऽभिवाद्यश्च संवृत्तः । स याचितचीवरं परिभुङ्क्ते अल्पमयाचितं[2] याचितपिण्डपातशयनासनग्लानप्रत्ययभैषज्यपरिष्कारान्परिभुङ्क्ते[3] अल्पमयाचितम्[4][2] ॥

भिक्षवः संशयजातास्सर्वसंशयच्छेत्तारं बुद्धं भगवन्तं पप्रच्छुः । कानि भदन्त विदितयशसा कर्माणि कृतानि येन जातमात्रस्य देवताभिः पताका उच्छ्रापिता यशसा च सर्वलोक आपूर्णः प्रव्रज्य[5] चार्हत्त्वं साक्षात्कृतमिति ॥ भगवानाह । विदितयशसैव भिक्षवः <पूर्वमन्यासु जातिषु> कर्माणि कृतान्युपचितानि लब्धसंभाराणि परिणतप्रत्ययान्योघवत्प्रत्युपस्थितान्यवश्यंभावीनि । विदितयशसा कर्माणि कृतान्युपचितानि को ऽन्यः प्रत्यनुभविष्यति । न भिक्षवः कर्माणि कृतान्युपचितानि बाह्ये [66a] पृथिवीधातौ विपच्यन्ते नाब्धातौ[6] न तेजोधातौ न वायुधातावपि तूपात्तेष्वेव[7] स्कन्धधात्वायतनेषु कर्माणि कृतानि विपच्यन्ते शुभान्यशुभानि च ।

न प्रणश्यन्ति कर्माणि कल्पकोटिशतैरपि ।
सामग्रीं प्राप्य कालं च फलन्ति खलु देहिनाम् ॥

1) BCP °र्हत्संवृ°, D °र्हसंवृ°.

2) Ex conject.; MS °याचितः. Cp. Feer, p. 257, 3 foll.

3) Ex conject.; MS °परिष्काराणां परि°.

4) MS अल्पमाचितः.

5) MS प्रव्रज्या.

6) B नाब्धाधौ, DP corr.

7) Cp. *supra*, p. 74 n. 9.

भूतपूर्वं भिक्षवो ऽतीते ऽध्वन्येकनवते कल्पे विपश्यी नाम सम्यक्संबुद्धो लोक उदपादि विद्याचरणसंपन्नः सुगतो लोकविदनुत्तरः पुरुषदम्यसारथिः शास्ता देवमनुष्याणां बुद्धो भगवान्। स बन्धुमतीं राजधानीमुपनिश्रित्य विहरति। यावद्विपश्यी सम्यक्संबुद्धः सकलं बुद्धकार्यं कृत्वेन्धनक्षयादिवाग्निर्निरुपधिशेषे निर्वाणधातौ परिनिर्वृतस्तस्य राज्ञा बन्धुमता शरीरे शरीरपूजां कृत्वा समन्तयोजनश्चतू[1]रत्नमयः स्तूपः प्रतिष्ठापितः क्रोशमु- 5 च्चत्वेन यत्रानेकानि प्राणिशतसहस्राणि कारान्कृत्वा स्वर्गमोक्षपरायणानि भवन्ति ॥ या- वद्राज्ञा बन्धुमता स्तूपमहः कारितस्तत्र च स्तूपमहे वर्तमाने मल्लानां[2] मध्ये पताका उच्छ्रापिता। यावद्राजमल्लेन राजमल्लो निहतः। ततस्तेन मल्लपताका आसादिता। स तामादायानेकप्राणिशतसहस्रपरिवृतो नाना विचित्रैर्वा‹द्यै›र्वा‹द्य›मानैर्[3]येन विपश्यिनः स्तूपस्तेनोपसंक्रान्तः। उपसंक्रम्य तथा‹गत›[4]गुणाना‹म›नुस्मरणं[5] कृत्वा तां पताकां स्तूप- 10 यष्ट्यां बद्ध्वा प्रणिधानं कृतवान्। अहमप्येवंविधानां गुणानां लाभी स्यामेवंविधमेव शा- स्तारमारागयेयं मा विरागयेयमिति ॥

भगवानाह। किं मन्यध्वे भिक्षवो यो ऽसौ तेन कालेन तेन समयेन मल्ल आसीदयं स विदितयशा[6]। यदनेन विपश्यिनः स्तूपे कारा[7]ः कृतास्तेन संसारे ऽनन्तं सुखमनुभूतवां- स्तेनैव हेतुना इदानीमर्हत्त्वं साक्षात्कृतम्। इति हि भिक्षव एकान्तकृष्णानां कर्मणामेका- 15 न्तकृष्णो विपाक एकान्तशुक्लानामेकान्तशुक्लो व्यतिमिश्राणां व्यतिमिश्रस्तस्मात्तर्हि

1) MS °श्चतुर°.

2) Ex conject.; MS मल्लामामध्ये (D °मधे). In Açokāv. this is thus related: सपताको ध्वजो मल्लैरुच्छ्रापितो यथा(read: था)र्थिभिः (f. 254 a 5).

3) Cp. *supra*, p. 122, 2. 163, 7, and, concerning नाना, p. 365 n. 5.

4) D fills up the gap.

5) Ex conject.; MS गुणाननुस्मरणं.

6) MS विदितयशसा.

7) Ex conject.; MS काराकृतानेन संसारे.

भिक्षव एकान्तकृष्णानि कर्माण्यपास्य व्यतिमिश्राणि चैकान्तशुक्लेष्वेव कर्मस्वाभोगः करणीय इत्येवं वो भिक्षवः शिक्षितव्यम् ॥

इदमवोचद्भगवानात्तमन‹स›स्ते[1] भिक्षवो भगवतो भाषितमभ्यनन्दन्[2] ॥

1) D has the missing akṣara.

2) After this, B and its copies, except D, have this colophon: चित्रावदानो नाम सप्तमो उद्दानगाथा (sic) समाप्ता ॥.

